भवति। तेन विषयस्य बाह्याकारवत् आन्तरोऽपि मनोमयः कश्चनाऽऽकारो भवति। बाह्यस्याभेदेऽपि मनोमयाकारस्य भेदेनैव एकस्यामेव योषिति भार्या, स्वसा, ननान्दा, मातेत्यादयो भेदा लक्ष्यन्ते। तत्र बाह्यपिण्डस्य नाशेऽपि मनोमयपिण्डाकारस्तिष्ठति। तेन स एवाकारः 'स्थायी'त्युच्यते।

यद्विषये कामादीनामुद्रेकस्तद्विषय एव द्रवीभावः। कामाद्यभावे सौरालोकादिभिरल्पतापकैरिव विषययोगे शिथिलीभावमात्रं भवति। वासनारूपेण तत्र वस्तुप्रवेशो न भवति। द्रवतायां प्रविष्टो वस्त्वाकारः काठिन्यदशापर्यन्तं स्थितः पुनर्द्रवीभावान्तरेण विषयान्तरे गृह्यमाणेऽपि प्रकाशमानत्वात् चेतसा न त्यज्यते। शैथिल्यावस्थायां तु न प्रविशति। प्रविष्टोऽपि त्यज्यते। तेन वासनाभासादिशब्दैस्तद्व्यपदेशः।

द्रवावस्थाप्रविष्टविषयाकारस्य अनपायित्वेन स्थायिभावशब्देन व्यवहारः। विभावादिसंयोगेन अभिव्यक्तस्थायिभाव एव श्रोतृवर्ण्ययोः सभ्याभिनेययोर्वा भेदतिरोधानेन सभ्यश्रोतृगत एव सन् परमानन्दसाक्षात्कारेण रसतामाप्नोति। तदुक्तमेव—

> स्थायिभावगिरातोऽसौ वस्त्वाकारोऽभिधीयते।
> व्यक्तश्च रसतामेति परानन्दतया पुनः॥ इति।

ननु कान्तादिविषयाणां शृङ्गारादिरसानां तदाकारस्य सुखरूपत्वाभावेन कथं सुखरूपत्वमिति चेन्न। **आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभि संविशन्ति** (तैत्ति० उप० ३.६) इत्यादिश्रुत्या परमानन्दरूपस्य ब्रह्मण एव सर्वजगदुपादानत्वात् मृदभिन्नघटवत् सर्वस्यैव प्रपञ्चस्य परमानन्दरूपत्वेन कान्ताद्याकारस्यापि सुखरूपत्वेन दोषाभावात्। **सर्वं खल्विदं ब्रह्म** (छान्दो० ३.१४.१), **इदं सर्वं यदयमात्मा** (बृह० २.४.६), **तदनन्यत्वमारम्भणशब्दादिभ्यः** (ब्रह्मसू० २.१.१४) इति श्रुति-सूत्रेभ्यः। न च तर्हि प्रपञ्चस्य अखण्डाद्वयानन्दाकारेण भानं स्यादिति वाच्यम्; अविद्यानिमित्तावरणविक्षेपाभ्यां कार्याकारतया भानेन पूर्णानन्दात्मना अभानात्।

ननु तर्हि कथं तद्भानमिति चेन्न। तदर्थमेव प्रमाणवृत्त्यपेक्षणात्। तथा हि—अज्ञातज्ञापकत्वेनैव प्रमाणानां प्रामाण्येन जडस्य भानाप्रसक्त्या तत्रावरणकृत्याभावेन अज्ञातत्वासम्भवात्, स्वप्रकाशतया भासमानचैतन्यस्यैव आवृतत्वाभ्युपगमेन सत्त्वस्थया कान्ताद्याकारया प्रमाणवृत्त्या तदावरणभङ्गेन कान्ताद्यवच्छिन्नचैतन्यस्य स्वप्रकाशसुखरूपत्वेन भानोपपत्तेः। अनवच्छिन्नचैतन्याभानान्न सद्योमुक्तिः, स्वप्रकाशत्वभङ्गो वा। कान्ताद्यवच्छिन्नचैतन्यमेव द्रवावस्थ-सात्त्विकमनोवृत्त्युपारूढतया भावत्वं प्राप्य रसतामाप्नोतीति न लौकिकरसस्यापि परमानन्दरूपत्वानुपपत्तिः।

लौकिकरसे विषयावच्छिन्नस्य चैतन्यस्य चिदानन्दाप्रस्फुरणात् न्यूनतैव। भक्तिरसे तु अनवच्छिन्नचिदानन्दघनस्य स्फुरणात्तद्वैशिष्ट्यम्। तत्र लौकिकरत्यादेर्लौकिकमेव कारणं काव्यनाट्योपदर्शितं 'विभावाः' उच्यन्ते। कार्यञ्च तदुपदर्शितम् 'अनुभावाः'। सहकारिणश्च लौकिका एव तथोपदर्शिताः 'व्यभिचारिणः' उच्यन्ते। तदेतत्त्रयमेव सभ्यनिष्ठस्य अलौकिकरत्यादेः समुचितमुद्बोधकम्। ज्ञातस्वपरसम्बन्धात् लौकिकाद्भावादन्यमेवास्य अलौकिकं भावं सभ्यनिष्ठं सामान्यतः पुरुषनिष्ठस्त्रीगोचर-रतित्वादिरूपेण त्रयोऽप्यमी बोधयन्ति। तेन विभावादिभावत्रितयसंसृष्टस्थायिभावावगाहिनी समूहालम्बनात्मिकैका सात्त्विकी मतिरुत्पद्यते। केषाञ्चिन्मते सैव रसः।

सिद्धान्तरीत्या तु तदभिव्यक्तं सुखं रसः। सुखस्य रसत्वमते रसव्यञ्जकता। तस्या मतेरेव रसत्वे तु विभावानुभावव्यभिचारिभावस्थायिभावानां प्रत्येकं विज्ञानं रसस्वरूपाभिव्यक्तौ कारणम्। उभयत्र स्थायिभावो रस इति प्रयोगस्तु लाक्षणिक एव। तदुक्तम्—

> विभावैरनुभावैश्च व्यभिचारिभिरप्युत।
> स्थायिभावः सुखत्वेन व्यज्यमानो रसः स्मृतः॥
> विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
> स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥
> ये तूपकर्तुमायान्ति स्थायिनं रसमुत्तमम्।
> उपकृत्य च गच्छन्ति ते मता व्यभिचारिणः॥ इति।

विभावैरीषद्रसाभिव्यक्तिः, अनुभावैः स्फुटा, व्यभिचारिभिश्च स्फुटतरा। तेन विभावादित्रितयसंसृष्टस्थायिभावावगाहि-समूहालम्बनात्मक-सात्त्विकमत्यभिव्यक्त-सुखरूपो रसः, तादृशी मतिरेव वा रसः। तादृशरसस्य सुखरूपत्वात्तस्य चाऽऽत्मरूपत्वात् यद्यप्याधारो न भवति, तथापि तद्व्यञ्जिकाया वृत्तेः सामाजिकमनोनिष्ठत्वव्यपदेशः। तत्र काव्यार्थानुकार्यनायकादिनिष्ठा रत्याद्याः स्थायिनो लौकिकाः, तद्बोद्धृसभ्यनिष्ठास्त्वलौकिकाः। आद्या यथायोग्यं सुखदुःखादिहेतवः। अन्त्यास्तु सुखमात्रैकहेतवः। बोद्धृनिष्ठानां दुःखाहेतुत्वादेव सुखमात्रैकहेतुत्वात् करुणादीनामपि रसत्वाभ्युपगतिः।

अभिव्यक्तत्वेन स्वप्रकाशत्वात् काव्यजन्या वैयञ्जनिकी निर्विकल्पकसुखात्मिका प्रतीतिर्जायते। नित्यस्वप्रकाशात्मरूपत्वाभ्युपगमरूपेणैव तत्र कार्यज्ञाप्यवैधर्म्यमपि सङ्गच्छते।

श्रुतिदुष्टादिदोषाभावोऽपि रसव्यञ्जकसामग्र्यामन्तर्भूतः। तेन गुणालङ्काररीतीनां विभावादिभावानां बोधको निर्दुष्टः काव्यरूपः शब्दो व्यञ्जनया

रसस्य व्यञ्जकः। नाट्यस्थले तु नाट्यमेव रसत्वव्यञ्जकम्। 'दशमस्त्वमसी'ति वाक्योत्थाऽपरोक्षवृत्तिवत् तादृक्काव्यरूपशब्दजन्या सुखगर्भिणी अपरोक्ष-रूपा वृत्तिरुत्पद्यते। एतेन शाब्दत्वेऽपि रसप्रतीतेरपरोक्षता युज्यते। रसो वै सः इत्यादिश्रुत्यनुरोधेन नित्यं सुखमेव रसः सिद्ध्यति।

विभावानुभावसञ्चारिभिर्व्यक्तः स्थायी भावो रसः। तत्र साङ्ख्यरीत्या आहङ्कारिके चित्ते कारणविशेषादुद्बुद्धसत्त्वे स्वेतरगुणावभिभूय प्रकाशमाने जातुचिदनुभूतरत्यादिस्थायिसंस्कारोऽपि उद्बुद्धीभूय प्रतीयमान उपचीय-मानः पुष्यमाणोऽभिन्नायमानोद्दिष्ट-चिच्छक्त्या स्वीयत्वेन भुज्यमानो रसो भवति, जडत्व-परप्रकाश्यत्वादिना उपनिषदुक्तरसाद्भिन्न एव पर्यवस्यति।

अन्येषां तु भौतिके द्रुते चेतसि मुद्रितो रत्यादिस्थाय्याकारः स्वोद्बोधक-महिम्ना तिरस्कृतावरणचिद्विशिष्टो रसः।

अन्यैस्तु—स्थाय्यवच्छिन्नभग्नावरणचिदेव रसः स्वीक्रियते।

यदुक्तम्—"अत्र पक्षे रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति इति वाक्यघटकायं-पदार्थकर्तृकलाभकर्मण एव रसत्वेन विवक्षणे स्वारस्यभङ्गः स्यात्। भग्नावरण-चैतन्यस्यैव अयंपदार्थतया कर्तृकर्मणोरभेदापत्तेरि"ति। तन्न; सावरण-स्यैवाऽयंत्वेन कर्तृतयाऽनावरणस्य कर्मतया औपाधिकभेदाभ्युपगमे कर्तृ-कर्मविरोधाभावात्।

यदुक्तम्—"स्वप्रकाशवादे आवरणभङ्गमन्तरेण इतरस्यानपेक्षणात्तस्मा-देव आनन्दीभवनसंभवात् पूर्वांशवैयर्थ्यमि"ति। तदपि न; आवरणभङ्गेन चिदात्मना प्रकाशेऽपि रसात्मना प्रकाशाय पूर्वांशस्य सार्थक्यात्। अतः स्वान्तःकरणादिसाक्षितया आत्मनो भानेऽपि अनाद्यविद्याप्रतिबन्धेन पूर्णा-नन्दात्मनाऽभानमुपपद्यते। तदुक्तम्—

अतो भानेऽप्यभाताऽसौ परमानन्दताऽऽत्मनः। इति।

तत्र पूर्णानन्दात्मना भाने तत्त्वसाक्षात्कारोऽपेक्षितः। रसात्मना भानाय विभावादिभिर्व्यक्तः स्थायी भावोऽपेक्षितः। चिदात्मना भानाय आवरण-भङ्गमात्रमपेक्षितम्। अत एव सावरणोऽनावरणं रसं लब्ध्वाऽऽनन्दीभवति इत्यपि युक्तमेव। न चानावरणः सन्नित्यनेनैव तत्सिद्धमिति वाच्यम्; तत्त्व-साक्षात्कारमन्तरा सावरणस्य सर्वथाऽनावरणत्वासंभवात्। केनचिदंशेन तथात्वे तु पूर्वोक्तव्यवस्थैव युक्ता। विषयावच्छिन्नचैतन्यनिष्ठस्यावरणस्य भङ्गे विषयप्रकाश एव। स्थाय्यवच्छिन्नचैतन्यप्रकाशे तु रसात्मना भानम्।

न च चेतनस्य निरंशत्वेन तस्मिन्नेव कथमंशांशिभावः? कथं चांशेन भानमंशान्तरेणाभानमिति वाच्यम्; वृक्षयोर्भानेऽपि तदभिन्नस्य भेदस्या-

भानवत् प्रकृतेऽपि तदुपपत्तेः। यथा त्वन्मते निरंशस्य निर्विकारस्यापि रससिन्धोर्बिन्दुः स्वल्पानन्दो जीवः संभवति, तथैव प्रकृतेऽपि तत्संभवात्।

एतावांस्तु विशेषः—त्वन्मते स परमार्थभूतः, अत्र त्वविद्योपाधिनिबन्धन एव। अयं स प्रकृतपरमात्मैव रसः रसपदार्थः। तमेव नापरं पूर्णात्मनांऽशेन वा लब्ध्वा अयं सोपाधिको जीवः आनन्दीभवति।

न चेदृशस्य स्थाय्यवच्छिन्नस्य भग्नावरणस्य चैतन्यस्योत्तरमीमांसया गतार्थता; तत्रानवच्छिन्नचैतन्यस्यैवोपेयत्वात् गुडजिह्विकान्यायेन परमोपेयप्रतिपत्त्यर्थत्वाद् रसशास्त्रस्यात्रापि सार्थक्यात्। त्वन्मते तु उत्तरमीमांसयाऽपि सविशेषस्यैव प्रतिपत्ताव्यत्वेन रसशास्त्रस्याप्यप्राकृतरसपर्यवसायित्वेन उत्तरमीमांसया अनारभ्यत्वापत्तेश्च।

न चापारमार्थिकत्वापत्त्या न रसशास्त्रस्य तत्र पर्यवसानमिति वाच्यम्; धर्मशास्त्रवत्ताथात्वेऽपि दोषाभावात्। अप्राकृतरसपर्यवसायित्वे तु ब्रह्मपर्यवसायित्वमेव। भक्तिरसस्य निरुपमसुखसंविद्रूपस्य अस्पृष्टदुःखानर्थव्रातस्य भक्तियोगस्य भगवद्रूपत्वोक्तेः।

न च तथात्वे स्थायिभावालम्बनविभावयोरैक्यापत्तिरिति वाच्यम्; बिम्बप्रतिबिम्बवदभेदेऽपि सोपाधिकभेदसत्त्वात्। न च तर्हि निर्विशेषस्येवास्यापि पारमार्थिकत्वे सद्वितीयत्वापत्त्या निर्विशेषत्वहानिः स्यादिति वाच्यम्; तस्योपाधेः परमार्थसत्तापेक्षया किञ्चिन्न्यूनसत्ताकत्वेऽपि बाधाभावात्। भगवद्गुणानां तद्भूषणाद्यपेक्षयोत्कर्षेऽपि सर्वनिरपेक्षस्वरूपापेक्षया किञ्चिन्निकर्षवत्तावददोषात्। बिम्बप्रतिबिम्बयोरिव स्थाय्यवच्छिन्नविभावालम्बनचैतन्योरभेदेन तत्रापकर्षाभावात्।

एवं प्राकृतरसवर्णनेन भगवदालम्बनके अप्राकृतरसेऽवतार एव तु मुख्यं रसशास्त्रतात्पर्यम्। तस्यैव सर्वशेषित्वप्रसिद्धेः। तत्र—

> मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
> मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥
>
> देवानां गुणलिङ्गानामानुश्रविककर्मणाम्।
> सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या।
> लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्॥

इत्यादिरीत्या भगवद्गुणश्रवणादिना द्रुतस्य स्निग्धस्य मनसो धारावाहिकतां गतायां भगवदाकाराकारितायां वृत्तौ तदभिव्यक्ते निरुपमसुखसंविद्रूपे भगवत्येव वा भक्तिशब्दप्रयोगः।

अचिन्त्याभेदाभेदवादिभिस्तु—

अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥

इति भक्तिलक्षणमुक्तम् । एतच्च श्रीभगवतः स्वरूपभूताह्लादिनीशक्तिवृत्तिरूपम् । अतोऽप्राकृतमपि कामादिवृत्तितादात्म्येनैव आविर्भूतम् ।

माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥
सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् ।
................हृषीकेशसेवनं भक्तिरुच्यते ॥

इति नारदपाञ्चरात्रवचनात् ।

अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ।
सालोक्य-सार्ष्टि-सायुज्य-सारूप्यैकत्वमप्युत ॥
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ।
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ॥

इति भागवतवचनाच्च ।

द्रुतचित्तानां द्रवप्रयोजक-सात्त्विकप्रकाशवृत्तिप्रतिबिम्बोद्ग्राहिण्याम् अप्राकृतायामाह्लादिनीवृत्तौ आलम्बनवैचित्र्यात् नानाविधाभिः स्वदमानायां मुख्यस्थायित्वेन व्यवह्रियमाणायां मुख्यरसस्वरूपताविर्भावयोग्यतावत्यां भक्तिशब्दः । तेनान्याभिलाषिताशून्यं तदेकस्पृहत्वमेव रतेर्लक्षणम् । यथा—

व्यक्तं मसृणतेवान्तर्लक्ष्यते रतिलक्षणम् ।
मुमुक्षुप्रभृतीनाञ्चेद् भवेदेषा रतिर्नहि ॥
विमुक्ताखिलतर्षैर्या मुक्तैरपि विमृग्यते ।
या कृष्णेनातिगोप्याऽऽशु भजद्भ्योऽपि न दीयते ॥
सा भुक्तिमुक्तिकामत्वाच्छुद्धां भक्तिमकुर्वताम् ।
हृदये संभवत्येषा कथं भागवती रतिः ॥
प्रेम्णस्तु प्रथमावस्था भाव इत्यभिधीयते ।
शुद्धसत्त्वविशेषात्मा प्रेमसूर्यांशुसाम्यभाक् ॥
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते ।
आविर्भूय मनोवृत्तौ व्रजन्ती तत्स्वरूपताम् ॥
स्वयंप्रकाशरूपाऽपि भासमाना प्रकाश्यवत् ।
वस्तुतः स्वयमास्वादस्वरूपैव रतिस्त्वसौ ।
कृष्णादिकर्मकास्वादहेतुत्वं प्रतिपद्यते ॥ इति ।

अत्र दुर्गमसङ्गमनी—स्थायिभावसामान्यरूपं प्रेमनाम्ना प्रणयादिकमपि क्रोडीकरोति। स्वरूपप्रकाशिका स्वरूपशक्तेः संविदाख्या वृत्तिः।

हलादिनी सन्धिनी संवित्त्वय्येका सर्वसंस्थितौ।
हलादतापकरी मिश्रा त्वयि नो गुणवर्जिते॥

ह्लादिनीमहाशक्तेः सारवृत्तिसमवेतवृत्तिसमवेततत्त्वसारांशत्वम्, तयोः समवेतयोः सारत्वञ्च।

सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते।
प्रसाद आन्तरो यः स्यात् स हार्द इति लक्ष्यते॥ इति।

शुद्धसत्त्वविशेषत्वञ्चात्र स्वरूपशक्तिशक्त्यन्तरलक्षण इति विष्णुपुराणानुसारेण ह्लादिनीनाम्ना महाशक्तिः तदीयसारवृत्तिसमवेततत्सारांशत्वमेव अवगन्तव्यम्। तयोः समवेतयोः सारत्वञ्च तन्नित्यप्रियजनाधिष्ठानकतदीयानुकूलेच्छामयपरमवृत्तित्वम्। ह्लादिनीसारसमवायित्वञ्च अस्यैव भावस्य परमपरिणामरूपमोदनाख्ये महाभावे व्यज्यते। तदुक्तम् 'उज्ज्वलनीलमणौ'—

राधिकायूथ एवासौ मोदनेन तु सर्वतः।
यः श्रीमान् हलादिनीशक्तेः सुविलासः प्रियो वरः॥ इति।

असौ-पदेन चानुकूल्येन कृष्णानुशीलनरूपा सामान्येन लक्षिता भक्तिरेवाकृष्यते। सापि यद्यपि धात्वर्थसामान्यरूपा, तथाप्यत्र चेष्टारूपा न गृह्यते। किन्तु चेष्टाभावरूपैव, विधेयस्य भावस्य साक्षान्निर्दिष्टत्वात्। भावमात्रस्य लक्षणम्—

शरीरेन्द्रियवर्गस्य विकाराणां विधायिकाः।
भावा विभावजनिताश्चित्तवृत्तय ईरिताः॥ इति।

चित्तवृत्तयश्चात्र प्रकारान्तरेण चित्तस्य स्थितयः। 'विकारो मानसो भावः' इत्यमरः। तथापि वक्ष्यमाणानां व्यभिचारिणामप्राप्तिस्तेषां योजयिष्यमाणानां चित्तमासृण्यकृत्त्वाभावात् प्रेमाङ्कुरत्वे विशेष्यत्वाच्च।

असौ सामान्यतो लक्षिता या भक्तिः, सैव निजांशविशेषे भाव उच्यते। स च किं किं स्वरूपः? कृष्णस्य सर्वशक्तिरूपः शुद्धसत्त्वविशेषो यः स एवात्मा तन्नित्यप्रियजनाधिष्ठानतया नित्यसिद्धं स्वरूपं यस्य सः।

भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते।

अस्य अप्राकृतत्वम्, अतादृशशुद्धसत्त्वविशेषह्लादिनीसाररूपत्वञ्च मोक्षसुखस्यापि तिरस्कारकारित्वात्।

किञ्च—रुचिभिः प्राप्त्याद्यभिलाष - स्वकर्तृकानुकूल्याभिलाष - सौहार्दाभिलाषैः चित्तार्द्रताकृत् ।

शान्तिप्रीति-प्रेयो-वत्सल-मधुराख्या मुख्यरसाः । हास्या-ऽद्भुत-वीर-करुण-रौद्र-भयानक-बीभत्सा गौणरसाः ।

शुद्धाद्वैतिभिः गोपालतापनीय-नारदपाञ्चरात्राद्यनुसारेण तस्याः प्रकारान्तरमपि निरूप्यते—'भक्तिरस्य भजनम् तदिहामुत्र फलभोगनैराश्येनास्मिन् मनःकल्पनमि'ति । तन्मनःकल्पनं किं स्वरूपमिति जिज्ञासायां नारदपाञ्चरात्रे तन्निष्कृष्यते—

माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥ इति ।

शाण्डिल्यसूत्रेऽपि—अथातो भक्तिजिज्ञासा इति प्रतिज्ञाय सा पराऽनुरक्तिरीश्वरे इति तस्या लक्षणं क्रियते । अनुरक्तिश्च स्नेह एव । स्निग्ध एवानुरक्त इति प्रयोगदर्शनात् । स्नेहश्च नेच्छाविशेषः, विशेषस्य निर्वक्तुमशक्यत्वात् । न च सुखविषयिणी सा स्नेह इति युक्तम् ; स्वर्गकामनायामपि तथात्वप्रसङ्गात् । पुत्रादिविषयकस्नेहस्य इच्छारूपत्वाभावेन तस्य स्नेहत्वाभावप्रसङ्गाच्च ।

ननूक्तम्—'इष्यमाणविषयिणी सा स्नेह' इति । तन्न ; स्वर्गस्य शत्रुहननादेश्चेष्यमाणत्वात्, तद्विषयकेच्छायां स्नेहादिपदप्रयोगस्य क्वाप्यदर्शनात् । 'स्निह्यामि, प्रीणामि, अनुरज्यामि, नेच्छामी'ति विरुद्धानुव्यवसायाच्च ।

अत एव नाराध्यत्वेन ज्ञानं ज्ञानान्तरं वा सः । अत एव न यत्नोऽपि सः । अनुकूलबुद्धिवेद्यत्वाच्च न द्वेषादिरपि । सविषयकत्वान्न लौकिकसुखरूपोऽपि । प्रत्यक्षत्वाच्च अदृष्टरूपोऽपि न । अतो मनोधर्मान्तरमेव स इति निश्चयः ।

सोऽपि न क्षणिकः, कालान्तरे तत्कार्यस्य दर्शनात्तद्विषयकसंस्कारे मानाभावाच्च स्थाय्येव । अत एव काव्यादावप्युच्यते—

आविर्भावदिने न येन गणितो हेतुस्तनीयानपि
क्षीयेताऽपि न चाऽपराधविधिना नत्या न यो वर्धते ।
पीयूषप्रतिवादिनस्त्रिजगतीदुःखद्रुहः साम्प्रतं
प्रेम्णस्तस्य गुरोः किमद्य करवै वाङ्निष्ठतालाघवम् ॥ इति ।

एवं स्थायित्वे तस्य सिद्धे मातुः पुत्रदर्शनादौ तदभिव्यक्तिरुत्कर्षश्च

भवतीति रसत्वमपि तस्य सुघटमेव। अत एव तत्स्मरणादौ दुग्धस्रावो यथासम्भवं व्यभिचारिणस्तत्र प्रसिद्धा एव। अत एव श्रीमदुद्धवागमन उक्तम्—

> यशोदाऽऽकर्ण्य नामानि कृष्णस्याऽऽचरितानि च।
> शृण्वन्त्यश्रूणि चास्राक्षीत् स्नेहस्नुतपयोधरा॥ इति।

एवमेव पितृ-भ्रातृ-मित्रादिष्वपि द्रष्टव्यम्। अत एव श्रीमद्भागवते नन्दादीनां तादृशानि तत्र तत्र वचांसि। शौनकस्य च—

> तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः।
> न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः॥ इति।

भक्ते रसत्वं कण्ठतोऽप्युक्तम्—

> निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।
> पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः॥ इति।

अतो भागवते रसो भक्तिरस एव।

> अस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे।
> भक्तिरुत्पद्यते पुंसः शोकमोहतमोपहा॥

इति भक्त्यर्थमेव भागवतसंहिता-प्रणयनकथनात् तत्र प्रतिपाद्यमानस्य भागवतरसस्य भक्तिरूपताया एव सिद्धेरिति। अत एव भक्तिरसः शृङ्गाराद्भिन्नतयाऽनुभूयत एव रसिकैः।

यत्तु—"शृङ्गारस्यैव द्वावप्यवस्थाभेदौ संयोगो विप्रलम्भश्चेति सर्वैरुच्यते" इति। तत्तु अविचारितरमणीयम्; मात्रादिष्वपि अनिषिद्धसंभोगसुखविप्रलम्भयोरुपलब्धेः। अतः स्नेहस्यैव तौ भेदौ।

वस्तुतस्तु—रतिरपि स्नेहविशेष एव। एवं सति शृङ्गारस्यैव रसत्वं न केवलं स्नेहस्येत्यत्र विनिगमकाभावात् तदुभयोः पार्थक्येन रसत्वं स्वीकार्यम्। तथा च नायिकायां नायकस्य, तस्मिंश्च तस्या या रतिः सा शृङ्गारः। मात्रादीनां पुत्रादौ तेषां च तेषु या रतिः; स केवलः स्नेहरस इति सिद्धम्।

भगवद्विषयिण्याः निरुपाधिकाया द्विविधाया अपि रतेरलौकिकत्वेन मुख्यरसरूपत्वम्, रसो वै सः इति श्रुतेर्भगवतो रसरूपत्वात्। लौकिक्यासु उपाधिजन्यत्वात्तदाऽऽभासत्वमिति ज्ञेयम्। तेन भक्तिरसस्य तेभ्योऽतिरिक्तत्वं निष्प्रत्यूहम्।

अद्वैतिरीत्या तु—भज्यते = सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनयेति करणव्युत्पत्त्या श्रवणादिसाधनलक्षणा भक्तिः। भजनं भक्तिरिति व्युत्पत्त्या अन्तःकरणस्य भगवदाकारतापत्तिरेव भक्तिरिति साधनसाध्यभेदेन भक्तिद्वैविध्योपपत्तिः। तत्र फलरूपाया भक्तेः स्वरूपम्—

भगवान् परमानन्दस्वरूपः स्वयमेव हि।
मनोगतस्तदाकाररसतामेति पुष्कलम्॥ इति।

परमानन्दस्वरूपो भगवानेव प्रतिबिम्बरूपेण मनोगतो रसतामेति तयोरैक्यात्। मनसि तत्प्रतिबिम्बमेव मनसो भगवदाकारता। प्राकृतरसेऽपि विषयावच्छिन्नचैतन्यमेव तदवस्थमनोवृत्त्युपारूढतया भावत्वं प्राप्य रसतामेति। तेन प्राकृतरसस्य न परमानन्दता, किन्तु जाड्यमिश्रणादनवच्छिन्नचैतन्याभानात् न्यूनतैव।

अतस्तदेव भावत्वं मनसि प्रतिपद्यते।
किञ्चिन्न्यूनाञ्च रसतां याति जाड्यविमिश्रणात्॥ इति।

सांख्यरीत्या तु त्रिगुणात्मकस्य कामिन्यादेः मनसि प्रविष्टः सुखाकार एव स्थायिभावत्वं प्रतिपद्य रसो भवति। मध्यमपरिमाणं मनो विषययोगाद्विषयाकारं भवति। अत एव बाह्यपिण्डनाशेऽपि बाह्यपिण्डात् पृथगपि मनोमयो विषयस्तिष्ठति, स एव स्थायिभावः।

भगवद्गुणश्रवणजनितद्रुतिरूपायां मनोवृत्तौ सर्वसाधनफलभूतायां गृहीतभगवदाकारायां विभावानुभावसञ्चारिसंयोगेन रसरूपतयाऽभिव्यक्तो भगवदाकारतारूपो रत्याख्यः स्थायिभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति। स एव भक्तियोगः। तदुक्तम्—

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥ इति।

रतिर्नाम भक्तिस्थायिभावो द्रुतचित्तप्रविष्टभगवदाकारतारूपः संस्कारविशेषः। कामजन्यायां तु द्रुतौ चित्ते या श्रीकृष्णाकारता सा विभावादिसंयोगदशायां संयोगाख्या तद्वियोगदशायां विप्रलम्भाख्या रतिरुच्यते। तत्रालम्बनविभावो भगवान्। उद्दीपनविभावः तुलसीचन्दनादिः। अनुभावो नेत्रविक्रियादिः। व्यभिचारिणो निर्वेदादयः। तैर्व्यक्तो भगवदाकारतारूपरसाख्यः स्थायिभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति। स एव भक्तियोगः, दुःखासम्भिन्नसुखरूपत्वेन पुरुषार्थः।

अत्र वस्त्वाकारोऽपि भगवानेव। स एव च भक्तियोगे स्थायिभावरूपो रसो बिम्बस्यैवोपाधिनिष्ठत्वेन प्रतीयमानस्य प्रतिबिम्बत्ववत्। तेनैव परमानन्दरूपताऽपि भक्तिरसस्य। न चैवमालम्बनविभावस्थायिभावयोरैक्यापत्तिः; तथात्वेऽपि परमेशजीवयोरिव बिम्बप्रतिबिम्बभावेन भेदस्य व्यवहारसिद्धत्वात्। मनो नित्यं विभुं पूर्णबोधसुखात्मकं भगवन्तं गृह्णाति, तत्तदाकारञ्च भवति। स चाकारः प्रतिबिम्बरूपो बिम्बरूपाद् भगवतोऽभिन्न एवेति तस्य परमानन्दरसरूपता युज्यते।

इयांस्त्वत्र विशेषः—एतादृशेन भगवदाकारेण मनोगतेन अनादिकालप्रविष्टाऽसंख्याकाराणां कवलीकरणात् तन्मात्रस्फूर्त्या कृतकृत्यता भवति। विषयाकारतानिराकरणपूर्वकं चित्तस्य भगवदाकारतासम्पादनमेव सर्वशास्त्रोद्देश्यम्। चित्तस्य भगवदाकारता स्वाभाविकी, चित्तकारणीभूतसूक्ष्मभूतकारणानिर्वचनीय-विचित्रानेकशक्तिमन्मायाधिष्ठानस्य नित्यविभोः सर्वत्रानुगतत्वात्। आकाशपूर्णतेव घटस्य। विषयाकारता तु घटस्य जलपूर्णतेव कारणसाध्या। तथाप्यन्याकारताविरोधि-भगवदाकारतासम्पादनेन शास्त्राणां सार्थक्यम्। स्वाभाविकी भगवदाकारता तु विषयाकारतासहचरितत्वात् साधकत्वाच्च न तद्विरोधिनी। तदुक्तम्—

> काठिन्यं विषये कुर्याद् द्रवत्वं भगवत्पदे।
> उपायैः शास्त्रनिर्दिष्टैरनुक्षणमतो बुधः॥
> यावत्यो द्रुतयश्चित्ते भावास्तावन्त एव हि।
> स्थायिनो रसतां यान्ति विभावादिसमाश्रयात्॥ इति।

भावाश्चित्तवृत्तयो धारावाहिका भूत्वा स्थायिनः सन्तः विभावादिसमाश्रयात् समूहालम्बनात्मकैकज्ञानविषयत्वरूपसम्बन्धेन स्वसम्बन्धीकरणाद् रसतां यान्ति इत्यन्वयः।

सात्त्विकी सुखमय्येव द्रुतिः रतिशब्दव्यपदेश्या—

> रजस्तमोविहीना या भगवद्विषया मतिः।
> सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते॥ इति।

तत एव—

> ईर्ष्याज-भयजद्वेषौ भगवद्विषयावपि।
> न भक्तिरसतां यातः साक्षाद्रतिविरोधतः॥ इति।

कालान्तरे प्रतिबन्धक्षये प्रचण्डतमोरजश्शान्तौ चित्तद्रुतिर्भक्तिरसतां याति।

भगवदविषयकत्वमिव स्थायिनः प्रीतिविरोधित्वमपि भक्तिरसत्वाभावे तन्त्रम्, प्रीतेरेव तत्रास्वादनीयत्वात्। तदुक्तम्—

आत्मोचितैर्विभावाद्यैः प्रीतिरास्वादनीयताम् ।
नीता चेतसि भक्तानां प्रीतिभक्तिरसो यतः ॥
अविरुद्धान् विरुद्धांश्च भावान् यो वशतां नयन् ।
सुराजेव विराजेत स स्थायीभाव उच्यते ।
स्थायिभावोऽत्र सम्प्रोक्तः श्रीकृष्णविषया मतिः ॥

अत्र श्रीकृष्णविषया रतिरेव प्रेमस्नेहादिशब्देन व्यपदिश्यते । तदुक्तं भक्ति-रसामृतसिन्धौ—

ह्रासशङ्काच्युताबद्धमूला प्रेमेयमुच्यते ।
सान्द्रश्चित्तद्रवं कुर्वन् प्रेमा स्नेह इतीर्यते ॥
क्षणिकस्यापि नेह स्याद्विश्लेषस्य सहिष्णुता ।
स्नेहः सरागो येन स्यात् सुखं दुःखमपि स्फुटम् ।
तत्सम्बन्धलवेऽप्यत्र प्रीतिः प्राणव्ययैरपि ॥ इति ।

तेन इष्टसाधनता-वासनैव भक्तिरित्यपि सम्यक् ।

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥

इति वचनमूलकमेव—

द्रुतस्य भगवद्धारावाहिकतां गता ।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥

इति वचनमपि । तेन भगवन्निष्ठेष्टसाधनताविषयकत्वमेव भक्तेः प्राणाः, तस्यैव भगवद्गुणाश्रयणनिबन्धनत्वसम्भवात् । अत एव भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य हर्षादिभिः परिपोषितस्य श्रीभागवतादि-श्रवणसमये भक्तैरनुभूयमानस्य भक्तिरसस्य न रसान्तरेऽन्तर्भावः सम्भवति । भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः ।

न च भक्तिरसस्य शान्तरसेऽन्तर्भावः; अनुरागस्य निर्वेदविरुद्धत्वादिति रसगङ्गाधरः । तदुक्तं भक्तिरसायने—

हर्षश्चित्तसमुल्लासः कथ्यते स चतुर्विधः ।
एकः परानन्दमयः श्रीशमाहात्म्यकारणम् ॥
तज्जन्यायां द्रुतौ शुद्धा रतिर्गोविन्दगोचरा ।
एतदन्तं हि शास्त्रेषु साधनाम्नानमिष्यते ॥ इति ।

शुद्धा रतिरेव सात्त्विकभक्तिः । तत्रानुपाधिः शुद्धा स्यात् । तदुक्तम्—

अनुपाधिः परानन्दमहिमैकनिबन्धना । इति ।

तन्निष्ठा भगवदभिन्नतत्प्रतिबिम्बरूपा भगवदाकारता तु स्वाभाविकी, न कारणजन्या, इत्युक्तमेव। अत्र तु अन्याकारतानिरसनपूर्वकं भगवदाकारतासम्पादने शास्त्रोपयोगः स्यादेव, संसारविरोधित्वादित्यस्यापि उक्तत्वात्।

चित्तद्रुतीनां कारणभेदात् स्थायिभेदः, तद्भेदाद्रसभेदः। चैद्य-कंसादीनां क्रोधेर्ष्याभयादिभिश्चित्तद्रुतौ सत्यामपि द्रुतचित्तस्य भगवदाकारतायां सत्यामपि न रतिः सञ्जाता। चैद्यादीनां तु—

तस्मात् स्वयम्प्रभानन्दाकाराऽपि मतिसन्ततिः।
प्रतिबन्धवशान्न स्यात् सुखव्यक्तिपदास्पदम्॥
रजःप्रबल - सत्त्वांशादीर्ष्याज - द्वेष - मिश्रिता।
मनोवृत्तिः परानन्दे चैद्यस्य न सुखायते॥
तमःप्रबल - सत्त्वांशाद्भयज - द्वेषमिश्रिता।
मनोवृत्तिः परानन्दे कंसस्य न सुखायते॥
तयोर्भाविशरीरे तु प्रतिबन्धक्षये सति।
सैव चित्तद्रुतिर्भक्तिरसतां प्रतिपद्यते॥ इति।

साधनाभ्यासे तुल्येऽपि रजस्तमःसमुच्छेदतारतम्येन रतेरपि तारतम्यम्। विरहे तु दुःखतारतम्येन रतेस्तारतम्यम्।

रजस्तमःसमुच्छेद - तारतम्येन गम्यते।
तुल्येऽपि साधनाभ्यासे तारतम्यं रतेरपि॥
विरहे यादृशं दुःखं तादृशी दृश्यते रतिः।
मृदुमध्याधिमात्रत्वाद्विशेषोऽत्रापि वीक्ष्यते॥ इति।

शृङ्गाररसस्य रतिः स्थायिभाव उक्तः। सुखमयी द्रुती रतिपदवाच्या। द्रुतस्य सात्त्विकस्य चित्तस्य धारावाहिकतां गता भगवद्विषयिणी मतिः सुखव्यञ्जकत्वाद् रतिशब्दवाच्या भवति। तत्र भगवत एव मनसि प्रतिबिम्बस्थायिभावतामुपगतस्य रसत्वोपपत्तेः।

रतिशब्दं तु भजतः सुखमय्यौ परे द्रुती।
रजस्तमोविहीना तु भगवद्विषया मतिः॥
सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते।

अत एव—

अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्।
तदचारु यतः कञ्चिन्न रसं स्वदते नटः॥

इति सङ्गीतरत्नाकरे शान्तरसस्य नाट्येऽपि स्वीकृतत्वात्। काव्ये तु महाभारतादिप्रबन्धानां शान्तरसप्रधानतायाः सर्वानुभवसिद्धत्वात् सर्वैरपि शान्तरसोऽभ्युपेयते। अत एव शान्तोऽपि नवमो रसः इति काव्यप्रकाशकृदुक्तिः।

केचित्तु—

> शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात्।
> अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते॥

इतिरीत्या शान्तस्य रसत्वं नोपगच्छन्ति। तदसङ्गतम्; नटे रसाभिव्यक्तेरनङ्गीकारात्। सभ्यानां शमसम्भवेन तत्र रसोद्बोधे बाधाभावात्। शमश्च यथा—

> वशीकाराख्यवैराग्यं यत्कामास्पृहतात्मकम्।
> तेन द्रुतस्य चित्तस्य प्रकाशः शम उच्यते॥ इति।

यदुक्तम्—"नटस्य शमाभावात् तदभिनयप्रकाशकत्वं नोपपद्यते" इति। तदपि न; भयक्रोधादेरपि तत्राभावेन तदभिनयप्रकाशनस्याप्यसङ्गत्यापत्तेः। यदि तु वस्तुभूतक्रोधादि-तत्कार्यवधबन्धाद्यभावेऽपि शिक्षाभ्यासादिना कृत्रिमतत्कार्याणामुत्पत्तौ न बाधकमित्युच्येत तदा शमेऽपि तत्तुल्यमेव।

यदप्युक्तम्—"नाट्ये शमविरोधिनां गीतवाद्यादीनां सत्त्वेन सभ्येष्वपि विषयवैमुख्यात्मनः शान्तस्य कथमभिव्यक्तिः?" तदपि तुच्छम्; नाट्ये वाद्यादीनां फलबलेन तदविरोधित्वकल्पनात्। विषयचिन्तासामान्यस्य तत्र विरोधित्वाभ्युपगमे शान्तरसालम्बनस्य संसारानित्यत्वस्य तदुद्दीपनपुराणादिश्रवण-सत्सङ्ग-पुण्यवन-तीर्थावलोकनादेरपि विषयत्वेन विरोधित्वापत्तेः।

'देवादिविषया रतिर्भावो न रसः' इति यदुक्तम्, तद्भगवदतिरिक्तदेवान्तरविषयत्वेन ज्ञातव्यम्। तदुक्तं भक्तिरसायने—

> रतिर्देवादिविषया व्यभिचारीति व्यञ्जितः।
> भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः॥
> देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात्।
> तद्योज्यं परमानन्दरूपे न परमात्मनि॥ इति।

देवान्तराणां जीवत्वेन मलिनसत्त्वप्रधानाविद्योपाधिकत्वेन तत्र परानन्दाप्रकाशनाद्रसत्वाभावोक्तिः सङ्गच्छते। परमानन्दस्वरूपे भगवति तु परमसुखस्फुरणात्तत्र रसत्वमस्त्येवेति तत्र रसत्वाभावोक्तिर्न सङ्गच्छते। न च तर्हि देवातिरिक्तनायकेष्वपि जीवत्वात् तद्रतीनामपि परानन्दास्फुरणाद् रसत्वाभावापत्तिः स्यादिति वाच्यम्; परमानन्दरूप-भगवत्सम्बन्धापेक्षया जाड्यमिश्रणेन तत्र न्यूनरसत्वाभ्युपगमेन तदिष्टापत्तेः। तदप्युक्तम्—

कान्तादिविषया वा ये रत्याद्यास्तत्र नेदृशम् ।
रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात् ॥ इति ।

ननु तर्हि तद्वदेव देवान्तरविषया रतिरपि रस एवेत्यायातम् । तत्र परिपूर्णसुखाभावेऽपि नायकान्तरादिसाधारण्येन न्यूनरसाभिव्यक्तेः । तथा च देवान्तरविषयत्वेऽपि तदुक्तेः कुतो विरोधपरिहार इति चेन्न । देवेषु पूज्यत्वातिशयबुद्ध्या सभ्याभिनेययोर्भेदतिरोधानाभावेन तत्र रसत्वाभावोक्तेः समञ्जसत्वात् ।

न च तर्हि भगवद्रतावपि तदापत्तिः समानैवेति वाच्यम् ; तस्याः परमानन्दविषयकत्वेनैव तत्र परमानन्दस्फुरणसंभवात्, नरलीलानुकारिणि भगवति भेदतिरोधानस्यापि संभवाच्च । अत एव पूर्वोक्तसाधारणीकरणव्यापारेण राधादिविषयक-रतिमत्कृष्णाभेदभावनया तद्विषयिणी रतिर्मा भूदित्येतदर्थं साधारणानां तच्छ्रवणनिषेधः । उपासनया गोपसीमन्तिनीभावापन्नानां तु कृष्णविषयक-रतिमद्राधाद्यभेदेन तद्विषयरतिमत्त्वं तु न दोषाय । अतः प्राकृतरसवैलक्षण्यबोधनायैव अप्राकृते दिव्यरसे 'भाव'-पदप्रयोगः । रसत्वनिषेधकस्य वाक्यस्य प्राकृतरसत्वनिषेध एव तात्पर्यम् ।

कान्तासम्मितरसवद्वाक्यस्य धर्मार्थादिपरत्वेन अन्यशेषत्वात् तद्विशेषणीभूतरसस्याप्यन्यशेषत्वमेव । भगवद्विषयकवाक्यस्य तु भगवत्प्रीतिमात्रपरत्वेन अनन्यशेषत्वेन तद्वैलक्षण्यद्योतनाय तत्र भावशब्दप्रयोगः ।

तदुक्तम्—

कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम् ।
वैराग्यविज्ञानविवक्षया विभो वचोविभूतिर्न तु पारमार्थ्यम् ॥
यस्तूत्तमश्लोक - गुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः ।
तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥ इति ।

वस्तुतस्तु—कान्ताद्यवच्छिन्नचैतन्यस्य परिच्छिन्नत्वेन तद्विषयासु रतिषु परिपूर्णस्य रसस्यानभिव्यक्त्या तत्र क्षुद्ररसत्वमेव । भगवद्रतौ तु परिपूर्णस्य अनवच्छिन्नपरमानन्दस्याभिव्यक्त्या तत्रैव मुख्यरसत्वं युक्तम् । खद्योतेभ्य इव क्षुद्रकान्तादिरसेभ्यो भगवद्रसस्तु प्रचण्डमार्तण्ड इव महत्तमः ।

किञ्च—यदि साक्षात् सुखविरोधिनां क्रोध-शोक-भयादीनामपि रसत्वमनुभवबलादभ्युपेयते, ततोऽनुभवसिद्धे ततः सहस्रगुणितरसे कुतस्तदपलापसम्भवः ? तदुक्तं भक्तिरसायने—

परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ।
खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा ॥

क्रोधशोकभयादीनां साक्षात्सुखविरोधिनाम् ।
रसत्वमप्यभ्युपगतं तथाऽनुभवमात्रतः ॥
इहाऽनुभवसिद्धोऽपि सहस्रगुणितो रसः ।
जडेनैव त्वया कस्मादकस्मादपलप्यते ॥ इति ।

विशिष्टाद्वैतिनस्तु—वेद उपास्ते इत्यादिश्रुत्यनुरोधेन उपासनावृत्तिरूपामेव भक्तिमिच्छन्ति। तस्या एव ध्रुवास्मृतित्वमपि आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः इति श्रुतौ च ध्रुवायाः स्मृतेरपवर्गोपायताश्रवणात् ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इति श्रुत्यन्तरैकवाक्यतया दर्शनसमानाकारत्वञ्च तस्या वदन्ति ।

द्वैताद्वैतिनां रीत्या भक्तेरुपासनात्मकत्वेऽपि भगवद्धामविग्रहादिवत् अप्राकृतत्वमेव, प्राकृताप्राकृतभेदेनाचेतनद्वैविध्याङ्गीकारात्। स्नेहस्निग्धचित्तवृत्तितादात्म्येन अप्राकृतदिव्यवपुषस्तस्याः प्रादुर्भावेन शास्त्रनिर्दिष्टोपायानुष्ठानसार्थक्यम् ।

श्रीकण्ठाद्याः शैवाः दत्ताद्याः शाक्ताश्च सौरा गाणपत्याः सर्वेऽपि भक्तिमाहात्म्यं वर्णयन्ति ।

यद्यपि सर्वेषामेव औपनिषदानां जीवात्मनः सच्चिदानन्दात्मकब्रह्मणोंऽशत्वेन चिदानन्दात्मकत्वेन रसरूपत्वं संभवति, भगवद्रूपस्य आलम्बनविभावस्यापि परमानन्दरूपत्वेन भगवदालम्बनके रसे रसत्वं संपुष्यते, परन्तु कान्तालम्बनके तु रसे कान्तादीनां केषाञ्चिद्रीत्या प्रकृतिपरमाण्वाद्यचित्कार्यत्वेन तत्र चिदानन्दाभावात् स्वतो रसाभावेन सांख्यवत् सुखदुःखमोहात्मकस्य कान्तादेः सुखात्मनाऽभिव्यक्त्या रसत्वपाषां मन्तव्यः ।

अद्वैतिरीत्या तु परमानन्दकार्यत्वेन सर्वस्य मायावरणाद्यपनयेन कान्ताद्यालम्बनयोगेऽपि रसाभिव्यक्तिः नानुपपन्ना ।

शुद्धाद्वैतरीत्याऽपि संसारस्य मायिकत्वेऽपि प्रपञ्चस्य ब्रह्मकार्यत्वे ब्रह्मात्मकतैव । लोकोत्तरकाव्यव्यापारमहिम्ना भगवद्विषयकरतिमद्भोग्याद् भजनादिश्रोतृभेदतिरोधानेन श्रोतृषु रसाभिव्यक्तिः सूपपन्ना । लोकार्थप्रपञ्चसृष्टौ सदंशपरिणामात्मकभोग्यवर्गे चिदंशपरिणामात्मकभोक्तृवर्गे यद्यपि क्रमेण चिदानन्दयोः आनन्दस्य च तिरोधानं भवति। अत एव जडस्य प्रकाशः सेन्द्रियमनोवृत्त्यादिसापेक्षो भवति । रजोव्यापारेण तमोऽपनयने सति सत्त्वमहिम्ना वस्तुप्रकाशः। भगवत्प्रकाशस्तु भगवन्महिम्नैवेत्यन्यत् ।

आत्मसृष्टौ तु तदात्मानं स्वयमकुरुते इत्यादि-श्रुतिरीत्या परमानन्दघनस्य भगवत एव रस-तदालम्बनद्वय-तदुपकरण-तदधिष्ठान-दिव्यधामादिरूपेण प्रादुर्भावः। तत्र सामान्यसृष्टाविव मायावरणं न भवति। तेन आत्मसृष्टौ सर्वस्यैव परमानन्दरूपता, तथापि रसशास्त्रमर्यादया रसपोषणार्थं योग-मायामयमावरणं स्वेच्छया उरीक्रियते। यथा भङ्गादिपानेन विनोदार्थं स्वेच्छया स्वात्मविस्मृतिरिष्यते तद्वत्। अन्यथा भगवतः स्वामिनीनाञ्च सर्व-नैरपेक्ष्येण स्वात्मतृप्तौ परस्परापेक्षानुपपत्तौ लीलासौरस्यानुपपत्तिश्च स्यात्। अत एव व्यतनोद् वैष्णवीं मायां पुत्रस्नेहमयीं विभुः इत्यत्रापि स्वेच्छामय्या वैष्णव्या मायया स्वभक्तानां स्वरूपादिविषये रसविशेषानुभवार्थं व्यामोह-वितानम्।

भगवान् सर्वाधारः सर्वप्रकाशकः सर्वहेतुश्च स्वप्रतिष्ठित एव, सर्वा-धारस्य अन्याधारत्वानुपपत्तेः। अत एव पूर्वोक्तरीत्या भगवद्धाम्नो व्रजस्य पूर्णानुराग-रससार-सरोजरूपत्वमुक्तम्। तत्रापि योगमायामय-प्रावरणाङ्गी-कारेण सम्भोग-विप्रलम्भादि-रसादिभेदोपपत्तिः।

स्वात्मसृष्टावपि व्रजस्थसरित्-सरो-महीधर-सरोज-वनराजि-मृग-विहङ्गा-दिषु भगवत्सङ्गेन देवभोग्य-तदधरामृतादिसंसर्गेण च दिव्यरसात्मभावः। व्रजभक्तेषु भगद्भोग्याऽधरामृतसञ्चारादिना च दिव्यस्त्रीभावः। अत्र सर्वत्र निखिलरसामृतमूर्तौ भगवति रसात्मकेषु भक्तेषु तदुपकरणेषु रसात्मकेष्वेव रसाविर्भावः। उद्बुद्धोद्वेल्लित-सम्प्रयोग-विप्रयोगात्मकोभयविध-शृङ्गाररस-सारसर्वस्वभूते भगवति च तदुभयविधशृङ्गारस्य उद्बोधः।

तत्र तादृशो भगवान् धर्मिरूपो धर्मसहितश्च। केवलो विप्रलम्भ-रस-भावरूपो द्वितीयश्च संभोगशृङ्गार-रसभावरूपः। उभयत्रापि आलम्बनविभाव-द्वयोद्दीपनानुभावसञ्चारिभावादिसर्वोपकरणविशिष्टो रसरूपो भगवान् व्यज्यते। पूर्वत्र भाव्यमानविशेषणः, अपरत्र च सुव्यक्तविशेषणः। तादृशो भगवान् तादृशश्रीकृष्ण-रूपेण कारणेन स्वामिनीषु उद्बुद्धः तद्विषयो रत्यादि-स्थायीभावः, चन्द्रिका-वंशीनिनादादिभिरुद्दीपितः, अश्रुपातादिभिः कार्यैरनु-भावैः प्रत्यायितः, व्यभिचारिभिरुत्कण्ठादिभिः पोषितश्च व्यज्यते। अस्य लौकिकत्वेऽपि नाट्यकाव्यादिदृष्ट्या विभावादीनामलौकिकत्वाद् अलौ-किकत्वमेव। अभिनेय-श्रोतव्यसभ्यश्रोत्रभेदानुसन्धानेन तन्निष्ठभेदतिरो-धानेन वा सभ्यादिगतः साश्चर्यमनुभूयते। यद्वा—तैरेव संभूय प्रादुर्भावितेन अलौकिकेन साधारणीकरणादिव्यापारेण तत्कालनिवर्तिताऽऽनन्दांशावरणा-ज्ञानेन प्रमुष्टप्रमातृत्वादिनिजधर्मेण स्वप्रकाशतया परमानन्दरूपेण साक्षा-त्क्रियते।

एवमेव श्रीकृष्णे स्वामिनीविषयको रत्यादिः पूज्यत्वातिशयात् निषेध-विषयत्वाच्च असाधारणीकरणाद्यभावेन श्रोत्रादिषु भावरूपो रत्यादिरेव व्यज्यते। प्रपञ्चसृष्टौ वासनादिरूपो रत्यादिको विभावादिभिः स्वप्रकाश-रसवैशिष्ट्यरूपेण स्वप्रकाशपरमानन्द एव वा विभावादिसंवलितत्वेन भासते। स्वात्मसृष्टौ तु उभयनिष्ठा वासनाऽपि रसस्वरूपैव। रससारसर्वस्व-रूपे भगवति स्वामिनीषु चान्यादृशस्य वासनापदार्थस्यासत्त्वात्।

प्रपञ्चगतानां स्वामिनीभावभावितानां भक्तानां तु भावना-तत्कृपासहकृत-श्रीमद्भागवतादिश्रवण-कीर्तनादिमहिम्ना मायाजवनिकामपसार्य प्रादुर्भूते निखिलरसामृतमूर्तौ शृङ्गाररससारसर्वस्वभूते वा भगवति पूर्वोक्तैरेव आलम्बनोद्दीपनादिभिः वासनात्मिकैव रतिर्जायते। साऽपि अप्राकृतभगव-द्विषयकत्वेन रसवैशिष्ट्यं रसत्वमेव वा प्रतिपद्यते। सेव्यस्वरूपविषयिणी रतिरपि एवमेव ऊहनीया।

अत एव रसो वै सः, स्थायिभावो रसः इत्यनयोः श्रौतस्मार्तवाक्ययोः भगवद्रूपे रस एव एकवाक्यतया निरुपचरितत्वेन सामञ्जस्यम्। अन्यत्र तु विभावानुभावसञ्चारिभावस्थायिभावसंवलितत्वेन रसस्य ब्रह्मानन्दसहोदर-त्वम्, न ब्रह्मरूपत्वम्।

यद्यप्यत्रापि रसशास्त्रमर्यादया विभावादिसंवलनमस्त्येव, तथापि विभावादीनामपि रसरूपत्वेन तदतिरिक्तत्वासिद्ध्या परब्रह्मरसरूपत्वस्थायि-भावरूपत्वयोरेकत्रैव पर्यवसानम्। लोके—स्थायिभावस्य अन्तःकरणनिष्ठत्वं प्रसिद्धम्। तेनात्रापि सर्वान्तःकरणरूपे विशुद्धसत्त्वमये वासुदेवे स्थायिभाव-रूपो भावात्मकः श्रीकृष्णो व्यक्तः। यथा च लोके स्थायिभावस्य आलम्बनो-द्दीपनादिवैशिष्ट्यं प्रसिद्धं तथैव प्रकृतेऽपि स्वामिन्यादि-वैशिष्ट्यम्। तेनैव श्रीकृष्णस्य निगूढस्त्रीभावरूपत्वम्।

चर्वणाविशिष्टः स्थायी रस उच्यते। चर्वणया स्थायी विषयीक्रियते। तेन स्थायिभावरूपस्य श्रीकृष्णस्य भोग्यतयाऽपि स्त्रीभावः सूच्यते। श्रीकृष्णस्य परस्परभावात्मकत्वेन परस्परात्मत्वेन च एकत्रैव भगवत्त्वं स्वामिनीत्वञ्च पल्लवादिमत्त्वेन विभावादिमत्त्वञ्च। न केवलं रसस्य भोग्यत्वेन स्त्रीभाव-रूपत्वम्, अपि तु अधरसुधयाऽपि भोग्यता सूच्यते। रसस्वरूपस्यापि रसो-द्रेकवत्त्वेन स्त्रीभावो व्यज्यते। रसोद्रेके यथा स्वामिनीषु भगवद्भावः, तथैव भगवत्यपि स्वामिनीभावः। लोके फलापर्यवसाय्येव भावो भवति, अत्र तु सत्यसङ्कल्पत्वेन भावोऽपि फले पर्यवस्यति।

कृष्णशब्दार्थोऽपि स्थायिभावरसात्मकानन्दे पर्यवस्यति। तत्र कृषेः

सत्तैवार्थः, सत्ता च भावरूपैव। भावश्चात्र स्थायिभावरूपः। तद्गतस्तद्रूपश्च आनन्दो 'ण'पदार्थः। शृङ्गारस्थायिभावहेतुत्वेन द्रावकः। कामोऽपि भगवदात्मकत्वाद् रसात्मक एव, न तु लौकिकः। सोऽकामयत इत्यादौ कामशब्देन वाऽधिदैविकस्य कामस्यैव (स्वरूपात्मिकाया इच्छाया) शब्दितत्वात्, तदंशभूतस्तु तेषु तेषु अनन्तानन्तजीवेषु प्रातिस्विक-कामात्मना व्यज्यते। तदेवमाधिदैविकस्य कामस्य साक्षात् मन्मथत्वम्। तत्रापि आकर्षण-मोहनाऽऽनन्दजनकत्वादिकं सर्वान्तररसमूलकमेवेति श्रोत्रस्य श्रोत्रमिव प्राणस्य प्राण इव मनसो मनोवत् ज्योतिषां ज्योतिरिव सूर्यस्य सूर्य इव प्रभोः प्रभुरिव साक्षान्मन्मथस्य मन्मथो भगवान्। तस्यापि साररूपत्वाद् विप्रलम्भं स्थायिभावस्य सर्वनैरपेक्ष्येण तन्महत्त्वम्। तेन कृष्णपदार्थप्रसङ्गे स्थायिभावरूप एव सत्तात्मको भावः कृषपदार्थो ग्राह्यः। स एव त्रैकालिक-सत्तारूपस्तद्गतो निरुपाधिक आनन्दश्च 'ण'शब्दार्थः। तेन स्थायिभावात्मा भगवानेव यशोदोत्सङ्गलालितः। आधिदैविकः कामोऽपि तत्कार्यत्वात् तदुत्पन्नस्तदङ्कुररूप एव। तदेतत्त्रितयं मिलितं कृष्णपदार्थः।

स च स्वामिनीनां हृदयस्थितः श्रीकृष्णालम्बनकः संभोग-विप्रलम्भात्मकोद्वेल्लितोभयविधशृङ्गारस्थायिभाव-रससुधासमुद्ररूपः।

मुख्यशक्तिस्वरूपं तु स्त्रीभावो हरिरुच्यते।
तत्र स्त्र्यंशः परा शक्तिः भावांशः कृष्णशब्दितः॥

इति रीत्या स्त्र्यंशः पराशक्तिः, भावांशः कृष्णशब्दितः। यथा कृष्णो भावात्मा तथैव साऽपि। विशिष्टस्यैव भक्तहृदयेषु स्थितिः। मिलितयोरेव मन्मथरूपता। आत्मा तु राधिका प्रोक्ता इत्यादिप्रमाणानुरोधेन श्रीराधाकृष्णस्य परमान्तरङ्गा स्वात्मभूतैव चन्द्रस्य चान्द्रका इव, भानोः प्रभा इव, गङ्गाजलस्य तरङ्गा इव आनन्दसिन्धोर्भगवतो वीचय इव व्रजसीमन्तिन्यस्तदात्मभूता एव। श्रीराधा तु गङ्गाजलस्य माधुर्यमिव परमानन्दरससारसिन्धोर्भगवतः माधुर्यसारसर्वस्वाधिष्ठात्री महालक्ष्मीस्वरूपा ताभ्योऽपि परमान्तरङ्गा। स्वात्मभूतायां तस्यामेव स्वात्मारामस्य रमणम्। अन्यास्वपि तासु तासु तदैव भगवतो रमणम्, यत्र तस्याः प्रादुर्भावः। अत एव तस्या उपासनया तत्तादात्म्यमासाद्यैव भगवद्रतिः सम्पाद्यते। श्रीराधाभावप्राप्त्यैव भगवतोऽपि संभोगप्राप्तिः। तदुक्तमन्यैरपि महानुभावैः—

अनाराध्य राधापदाम्भोजयुग्ममनासेव्य वृन्दाटवीं तत्पदाङ्काम्।
असंभाष्य तद्भावगंभीरचित्तान् कथं श्यामसिन्धोरसस्यावगाहः॥　इति।

यद्यपि भूम्याद्यव्यक्तान्ता अपरा प्रकृतयो जीवरूपाश्च पराः प्रकृतयोऽपि भगवच्छक्तिरूपा एव।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इति गीतापद्ये 'मन' इत्यनेन लक्षणया तत्कारणं महत्तत्त्वं सूच्यते। बुद्धि-पदेन अहन्तत्त्वस्य कारणभूतं महत्तत्त्वमुच्यते। अहङ्कारशब्देन च अव्यक्त-तत्त्वं लक्ष्यते। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत्—इत्यादि-गीतादिवचनेभ्यः भगवदुद्भूतत्वेन भगवदात्मकत्वेन भगवद्भावापत्तियोग्यताऽपि सर्वत्र; तथापि यावत्पर्यन्तं भगवद्भावाभिव्यक्तिर्न भवति तावद्भगवद्रतिर्न संभवत्येव।

अतदात्मभूतैः देहेन्द्रियमनोबुद्ध्यहङ्कारैस्तथाविधैः आत्मभिश्च रसात्मको भगवान् वैजात्येन स्प्रष्टुमप्यशक्यः। तैजसेन चक्षुषा तैजसं रूपमेव उपलभ्यते, न शब्दादयः। पार्थिवेन घ्राणेन पार्थिवो गन्धो गृह्यते, न रूपम्। तत्कस्य हेतोः? साजात्य-वैजात्याभ्यामित्येव मन्तव्यम्। तथैव अप्राकृत-रसात्मको भगवान् अतदात्मकैरिन्द्रियादिभिः नानुभूयते। रसात्मकैस्तु तैः सर्वैरप्यनुभूयत एव।

तदर्थमेव भूशुद्धि-भूतशुद्धि-भूम्यादिप्रपञ्चप्रविलयादिभिः अकुलेन्दुगलितामृतधारामयैः भावनावशाद् भगवतः प्रसूतैर्दिव्यैर्भूतैः उपासनोपयोगिदिव्य-देहनिर्माणम्, प्राणप्रतिष्ठापनञ्च; अन्तर्बहिर्मातृकान्यासः, ऋष्यादिन्यासो मन्त्राक्षरादिन्यासश्च, तत्त्वशुद्धिः, षडध्वशोधनमेवमादिभिः मन्त्रभावितैः सामान्यार्घ्यविशेषार्घ्यामृतप्रुषद्भिः स्वात्मशोधनम्; यज्ञैर्महायज्ञैः तीर्थाभिषेकैश्च ब्रह्मोपस्पर्शनार्हा ब्राह्मी तनुः सम्पाद्यते।

तत्रापि दिव्यदम्पती-चरणारविन्दयुगल-गलितामृतधारया स्वात्मानं परिप्लाव्य जप-ध्यानादिभिः भगवदभिध्यानप्राप्त-भगवदाश्लेषनिर्वृत्त्या रसात्मकत्वं पोष्यते। तद्वियोगाग्निजन्यतीव्रतापैश्च अवशिष्टप्राकृतत्वदाहः, तत्तप्ततनूनामेव तत्संभोगप्राप्तिश्रवणात्। तेन रसात्मकैरेव देहेन्द्रियादिभी रसात्मको भगवान् भुज्यते।

अत एव नानाविधैस्तपोभिरुपासनैः कुसुमसरोवराद्यमृतोपस्पर्शनैः व्रजभक्तप्रसादविशेषैश्च नारदस्य तादृशतनुप्राप्तिः। दण्डकारण्यवासिभिः महर्षिभिश्च राघवेन्द्रदर्शन-तत्प्रसादजनित-व्रजगोपकन्याजनुःप्राप्तिः। ततश्च कात्यायिन्यर्चनव्रताचरणम्, चीरहरणादिप्रसङ्गे तद्दर्शनम्, निरावरण-ब्रह्मसंसृष्टतया निरावरणब्रह्मभावापन्न-दुकूलकुचोत्तरीयादिपरिधानादिभिः निरावरणकर्णकुहरद्वारा तन्मुखचन्द्रनिर्गत-वेणुगीतपीयूषमय-तदधरामृत-प्राप्त्या च तद्भावप्राप्तिः। तत्रापि देहेन्द्रियादेः प्राकृतत्वावशेषे रसात्मकत्वापरिपोषे च सति भगवत्संप्रयोग-विप्रयोगवैशेष्येणैव तत्पूर्तिः। तदुक्तम्—

दुःसह - प्रेष्ठ - विरह - तीव्रताप-धुताः शुभाः ।
ध्यानप्राप्ताच्युताश्लेष - निर्वृत्त्या - क्षीणमङ्गलाः ॥
तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गताः ।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥ इति ।

अत्र दुःसहप्रेष्ठविरहतीव्रतापेन धुतानि अशुभानि तद्देहादिगतानि प्राकृतत्व-भौतिकत्वादीनि यासां ताः । ध्यानप्राप्तस्य अच्युतस्य आश्लेषेण जन्यया निर्वृत्त्या उद्रिक्तपरमानन्देन अक्षीणानि पुष्टिं गतानि मङ्गलानि तद्देहादिगतानि रसात्मकत्वादीनि यासां तास्तथोक्ताः । सद्यः प्रक्षीणबन्धनाः तत्कालप्रक्षीणतत्प्राप्तिप्रतिबन्धाः । जारबुद्ध्याऽपि तमेव परमात्मानं प्रापुरिति भावः ।

तत्पदार्थात्मिकाः तद्रश्मिरूपाः तच्छक्तिरूपास्तु नित्यसिद्धा एव । श्रुतिरूपा अपि सिद्धप्रायाः । तन्माधुर्यसारसर्वस्वरूपा वृषभानुनन्दिनी तु ततोऽपि अन्तरङ्गेत्युक्तमेव । परस्परभावात्मकत्वेनापि परस्परात्मानौ । स्वतःसिद्धानां यः स्वभावसिद्धस्तापः, स एव साधकानामभ्यसनीयः साधनरूपात्मकः । गूढब्रह्मसच्चिदानन्दरूपः श्रीकृष्णः परात्परः । स च स्वामिनीहृदयस्थितः विप्रलम्भादिरत्यादिस्थायिभावात्मकः । गूढस्त्रीभावभावात्मा विप्रलम्भस्थायिभावरूपे कैवल्यात् स्त्रीभावोऽव्यक्तत्वाद् गूढ एव भवति । संयोगे तु स्त्रीभावोऽपि स्फुट एव । भोग्यतारूपस्त्रीभावोऽपि भगवतो विप्रलम्भे गूढ एव भवति । प्रकटरूपेण तत्तद्धर्मराहित्येऽपि भाव्यमानत्वात् सर्वधर्मसाहित्यमस्त्येव । ततो भावभावात्मा भगवान् सर्वलीलारूपकलात्मको भवति ।

धर्मसहितः केवलश्चेति द्विविधो रसः । केवलो नाट्ये, धर्मसहितश्च सम्भोगे । स च समुद्बुद्धसंयोग-विप्रलम्भात्मकोभयविध-शृङ्गाररससिन्धुरूपः सर्वात्मभावात्मक-स्त्रीभावरूपो विह्वलः ।

श्रीकृष्णः सच्चिदानन्दो गूढब्रह्म परात्परः ।
गूढस्त्रीभावभावात्मा स्वामिनीहृदयस्थितः ॥
स्थायिभावात्मकः सर्वलीलारूपफलात्मकः ।
रासलीलापरो नित्यो भावाभावात्मकः परः ॥
स्वामिनीवृन्द - मध्यस्थस्तदेक - रसमग्नकः ।
जीववत्तदधीनश्च लभ्यः सर्वात्मभावकैः ।
संयोगे राधिकायुक्तः संयोगात्मा तदात्मकः ॥ इति ।

तद्भुजाच्छादितः तदेकनिरुद्धपरस्परहृदयस्थभावरूप उभयोभयभावात्मा उभयरसात्मा च परस्परहृदयभावाब्धिचन्द्ररूपः । स च स्वामिनीसहित एव पूर्णरसात्मकः, तस्याऽऽलम्बनविभावद्वयसंयोगनिष्पन्नत्वात् ।

एतादृशे तु पुलिने त्रिभङ्गललितं हरिम् ।
बर्हिपिच्छशिरोभूषं सरोजसदृशाननम् ॥
चञ्चलारक्तनयन - मलकावृतभालकम् ।
श्रुतियुग्मलसच्छ्रीमन् - मकराकृतिकुण्डलम् ।
दिव्याङ्गरागललितं सर्वाभरणभूषितम् ।
पीताम्बरावृतं श्रीमद्वनमालाविराजितम् ॥ इति ।

पञ्चपर्वाया अविद्याया अपनोदनाय विद्याऽपि पञ्चपर्वैव अपेक्षिता । साऽपि निम्नलिखितश्लोके निरूपिता—

वैराग्य-साङ्ख्य-योगौ च तयोर्भक्तिश्च केशवे ।
पञ्चपर्वेति विद्येयं यया विद्वान् हरिं विशेत् ॥ इति ।

शुद्धाद्वैतरीत्या तदर्थस्तु—भगवद्भिन्नेषु रागाभावो वैराग्यम् । रसात्मकत्वेन पुरुषोत्तमज्ञानं साङ्ख्यम् । चित्तस्य तदेकपरत्वं योगः । भगवद्विरहे परमक्लेशानुभवः तापः । भुक्त्यादिनैरपेक्ष्येण भगवदासक्तिः भक्तिः । सरसः शृङ्गारात्मा भगवानेवात्र ध्येयः ।

तत्र वेणुगानेन स्त्रिय उद्बोधिताः, गुणगानेन च भगवानुद्बोधितः । आधिदैविकः स्मरोऽपि लीलामध्यपातित्वात् मानापनोदनादिकार्यार्थं प्रबुद्धः । भगवांश्च नटवरवपुः विप्रयोग-संप्रयोगरक्षात्मकः । नृत्यन्मयूरानुकरणत्वात् धृतबर्हापीडत्वेन उद्बुद्धरसस्वरूपः । कर्णिकारस्थापनेन उच्छलितरसभावेन पीताम्बरेण च गुप्ततया सम्पादितरसताकः । वैजयन्तीवनमालोभयवैशिष्ट्येन शृङ्गारोपयोगि-यावद्रससम्बन्धि-यशोद्योतकः । अधरसुधया बोधितस्वीयभोग्यत्व-सूचितगूढस्त्रीभावः, तेनैव सूचित-भक्तपरतन्त्राकः, शुद्धानुग्रहमार्गीयरसस्वरूपः सुधामयेन वेणुरवेण तासां निरावरण-कर्ण-कुहरद्वारा देहेन्द्रियप्राणान्तःकरणजीवेषु प्रादुर्बभूव ।

तत्र भावनासंवर्धितसुधोद्रेकाद् गलनरूपं वर्णनमभूत् । यथा परिवेषणार्थं रसश्चषके भ्रियते तथैव भावात्मकभगवद्रूपो गूढस्त्रीभावो रसदानार्थं धर्मरूपो रसः स्वेनैव भ्रियते । अत्र पात्रस्थानीयो धर्मिरूपस्तत्स्थ रसस्थानीयस्तासु स्थापनीयो धर्मरूपः । धर्मिरूपस्य वपुःप्राकट्यमेव भरणम् । रसस्य सावरणत्वात् पीताम्बरधारणम् । पीताम्बरानुभवजन्यमदेन तदन्तःस्थितालम्बनाद्यस्फूर्तिः । सुधाऽपि देवभोग्या सरित्-सरोवर-वनराज्यादिसंसृष्टा । भगवद्भोग्या तु वर्णनव्याजेन तासामधरपल्लवस्था मुख्यलीलायां भगवतो भोग्या । सर्वैरपि या साक्षादभोग्या नादमार्गेणैव भोग्या, वैपरीत्ये मुख्य-

यैव वा भोग्या सर्वाभोग्या। यद्यपि साऽप्यधरे विद्यमाना, तथापि वर्णनात् पूर्वमयोग्यत्वात् वर्णनायां मुखे समागच्छति, गमनागमने तस्या एव प्राधान्यात्। मुखस्य उच्छिष्टत्वं तच्छेषत्वमेव, तेन नोच्छिष्टेन शेषभूतेन मुखेन साऽनुभवितुं शक्या।

विप्रलम्भरसरूपम् उत्तरदलात्मकं स्वरूपं श्रोत्रद्वारा प्रविष्टं सदनुभूतं भवति। ततो वर्णनेन मुखद्वारा निर्गच्छति। श्रवणे मुखस्य परम्परयैव हेतुत्वम्। ततः श्रोत्रपेयैव सा।

सा हि सर्वेषां भगवदीयत्वं सम्पादयति। आनन्दसारत्वात् सा न साधनतामापद्यते। वर्णनायां मुखमागच्छन्ती मुखमपि भगवद्भोगयोग्यं करोति। सृष्ट्युत्पन्नानां भोग एतत्पर्यवसायी। तद्द्वारैव ततो विमोचनं स्वाश्रयप्रापणं च। भगवत्सम्बन्धिहस्तारविन्दादिष्वपि यद्यपि रससारत्वात् फलरूपत्वमेव, तथापि तस्य स्पर्शादौ फलरूपत्वेऽपि भक्ताह्वानादौ साधनत्वमपि भवति। किन्तु अधरसुधा तु फलरूपैव न साधनत्वं गच्छति।

यद्यपि तासां मुखे भगवद्भोगयोग्यतायाः सम्पादनेन तत्रापि साधनत्वं वक्तुं शक्यते, तथापि श्रोत्रपेयाया एव स्वप्राप्तावेव च साधनत्वं नेतरत्र। साक्षाद्भोग्यायास्तु केवलफलत्वमेव। भगवतो भोग्यत्वावस्थायां भोक्त्रीभिर्लभ्यमानत्वात् सुधाभोगाद्रसाधिक्ये स्त्रीभावे जाते पुंभावाभिस्ताभिर्भगवान् भोग्यो भवत्येव। भगवतो भक्ताधीनत्वात् भक्तानां भोक्तृत्वम्।

**कृष्णाधीना तु मर्यादा स्वाधीना पुष्टिरुच्यते।**

इति वचनात्। अत एव स्त्रीभावापन्नो भगवान् कृष्णपदार्थः। तादृशभावापन्नस्य भगवतो रसाविष्टपरमानन्दरूपत्वम्। सुधासार्थक्यायाऽपि भगवतः स्त्रीभावोऽपेक्षितः। स्त्रीभावाभावे भगवदधरसुधाया वैफल्यात्।

भगवद्भोगानन्तरमेव भगवान् भोग्यो भवति। तत्र च स्त्रिय एवाधिकारिण्यः, भगवतः स्वेनान्येन वा उपभोक्तुमशक्यत्वात्। तत एव नायिकानां पुंभावावेशोऽपि सूचितः। स्त्रीणां हृदये नादद्वारा पूरितो भावः सुधारूपो गूढसर्वाभोग्यः कृष्ण एव मुख्यं फलम्। लोके तु पुरुषाधिकरणको रसो भवति। अत्र तु भगवानेव रसः। रसस्य भगवदभेदो भगवतश्च तद्वपुषोऽभेदः रसमयवपुष्ट्वात्। लोके तु उद्दीपनादिराहित्येऽपि हस्ताभिनयादिनैव तत्प्रदर्श्यते। भगवति तु विप्रलम्भस्यापि अलौकिकत्वात् भाव्यमानमपि तदुद्दीपनादि सदेव। तथापि अनाविर्भावितत्वरूपेणैव विप्रलम्भस्य केवलत्वमुच्यते।

आविर्भूतसर्वसामग्रीविशिष्टत्वं तस्य संयोगरसत्वमुच्यते। लोके यद्यपि तयोरुभयोरेकदैव एकत्रावस्थानं विरुद्धम्, तथापि भगवतः सकलविरुद्ध-धर्माश्रयत्वान्न विरोधः। युगपदेव उभयोरुद्वेलितत्वेन उद्बुद्धरूपता च। वनस्थितैः संयोगाद् व्रजस्थितैः विरहाच्च उभयरसरूपत्वं न विरुद्धयते। विप्रयोगेऽपि संयोगः, संयोगेऽपि विप्रयोगो दिव्यदम्पत्योः प्रायेणोपलभ्यते।

अङ्के स्थितेऽपि दयिते किमपि प्रलापं
हा मोहनेति मधुरं विदधत्यकस्मात्।

इत्यादिवचनात्।

भगवच्छिरोवतंसरूपे दिव्ये मुकुटे चूतप्रवालो बर्हस्तबकश्च अनुपृक्तौ। पीताम्बरे माला चानुपृक्ता। सर्वे चैते स्थायिभाव-व्यभिचारिभावा-ऽनुभावा-त्मका एव। अत्र स्थायिभावो विभावश्चैक एव। न च सर्वथैक्ये स्थायि-भावत्वमेव न स्यादिति वाच्यम्; धर्मधर्मिभावेन तद्भेदस्याप्युपपत्तेः। धर्म-रूपस्य स्थायिभावत्वम्, स्वरूपस्य धर्मिरूपस्य आलम्बनविभावत्वम्, व्यभि-चारिभावाऽनुभावाभ्याम् आलम्बनविभावेन चाभिव्यक्तस्य धर्मरूपस्य स्थायिभावस्य ततो वैचित्र्यात्।

नवलकोमलारुणाम्रप्रवाले रसस्य प्रतिष्ठितत्वेन स्थायिभावत्वम्, बर्हे रूपमात्रस्य प्रतिष्ठितत्वाद् रसव्यभिचारात् स्तबकानां व्यभिचारिभावत्वम्, नृत्यन्मयूरानुकरणत्वाद् रसोद्रेकसूचकत्वाद् रससञ्चारकत्वेन सञ्चारित्वञ्च, उत्पलाब्जमालायां सुगन्धस्य प्रतिष्ठितत्वाद् रसानुभावकत्वात् तस्याऽनु-भावत्वम्। स्वधर्मिस्वरूपाच्छादनाय मायामयं परिधानञ्चोक्तम्।

यद्यपि वैचित्र्यसम्पादका गुणा एव; तथापि धर्म्याच्छादनमपेक्षितम्, तद्विना तदनुपपत्तेः। रसवद्वाक्यं काव्यमिति रीत्या यथा काव्यश्रवणे तन्निष्ठो रसः श्रोतृभिश्चर्वणयाऽऽस्वाद्यते, तथा तद्बोधकस्य 'चूतप्रवाल-बर्हस्तबकोत्पलाब्जमालानुपृक्तपरिधानविचित्रवेषौ' इत्यादिवाक्यस्य परितः सुधागलनात्मकवर्णनरूपत्वात् श्रोत्रीभिरन्योन्यं तच्छ्रवणे सति तन्निष्ठो रसः श्रोत्रीभिरन्योन्यं चर्वणयाऽऽस्वाद्यते।

तत्र पल्लवेन प्रथमभावः सूचितः, प्रथमं पल्लवो मतः इति सिद्धान्तात्। बर्हस्तबकेन भावकलिका सूच्यते। तेनैव च भावस्य वेषस्य च वैचित्र्यमपि सूच्यते। उत्पलाब्जमालया अहोरात्रभावनया तद्वासना सूच्यते। उद्बुद्धस्य रसस्याऽगोपने रसाभासत्वं स्यात्, ततः परिधानप्रावरणम्। रजः-सत्त्व-तमः-स्वरूपा अपि चूतप्रवालादयः, ततोऽपि रसोपयोगः। अरुणचूतप्रवालात्मकेन

रजसा विविधभावोत्पत्तिः सूच्यते। बर्हरूपेण तमसाऽवष्टम्भात्मकेन त्वेकत्र भगवदवयवे प्रीत्याधिक्ये मनसो लयः, उत्पलेन सत्त्वेन रसोपयोगितया भगवदीयपदार्थानां ज्ञानम्।

आम्रस्य रसप्रधानत्वेन तत्प्रवालेन लोभात्मकाधरामृतं सूच्यते। बर्हस्तबकेन रूपसौन्दर्यं सूच्यते। उत्पले तदीयानन्दमये विग्रहे सहजः सुगन्धः सूच्यते। रसस्य गोप्यत्वं परिधानेन सूच्यते। प्रथमेन प्रेमनिरोधः, द्वितीयेन आसक्तिनिरोधः, तृतीयेन च व्यसननिरोधः सूचितः। यथा कलिकायां रसरूप-गन्धादयः अव्यक्ता अपि किञ्चिद् व्यक्तास्तथा आसक्तौ कटाक्ष-स्मिताऽऽलापादयः अव्यक्ताः किञ्चिच्च व्यक्ताः। तदनन्तरं भावस्य पुष्पवद् वैचित्र्यं भवति। पुष्पे जाते वासना स्फुटा भवति। व्यसने जाते तत्कार्याणां दर्शना-ऽऽश्लेष-रहोभाषणादीनां सातत्येन जायमानत्वात् वासना स्फुट्यते। तदेतत्सर्वमावृतमेव युज्यत इति मायामय-पीताम्बरधारणम्।

प्रस्तुतविषयोपष्टम्भकत्वेनात्र रस-तद्व्यञ्जकविभावादिविषये किञ्चिद् विचार्यते। तदुक्तम् अग्निपुराणे—

> तत्र ज्ञेया विभावास्तु रत्यास्वादनहेतवः।
> विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते।
> विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः॥
> नास्ति यत्र सुखं दुःखं न द्वेषो न च मत्सरः।
> समः सर्वेषु भूतेषु स शान्तः प्रथितो रसः॥
> आत्मोचितैर्विभावाद्यैः प्रीतिरास्वादनीयताम्।
> नीता चेतसि भक्तानां प्रीतभक्तिरसो यतः॥
> अविरुद्धान् विरुद्धांश्च भावान् यो वशतां नयन्।
> सुराजेव विराजेत स स्थायीभाव उच्यते॥

तत्र १. इष्टवस्तुसमीहाजनिता मनोविकृतिपरिपूर्णा रतिः। मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं तत्प्रकृतिकः शृङ्गाररसः। २. अव्रीडादिभिश्चेतोविकासो हासः। तत्प्रकृतिको हास्यरसः। ३. रत्यनालिङ्गितेष्टविश्लेषजनितो मनोविकारः शोकः। तत्प्रकृतिकः करुणरसः। रत्यालिङ्गितस्तु विप्रलम्भः। तथैव यूनोरेकस्मिन् मृते प्रलापः करुणरसः। जीवतोर्विश्लेषे प्रलापस्तु विप्रलम्भः। ४. अवज्ञादिकृतः प्रमोदप्रतिकूलमनोविकारः क्रोधः। तत्प्रकृतिको रौद्ररसः। प्रमोदानुकूलस्तु वीररस एव। ५. शौर्य-दया-दानाद्यन्यतरकृतपरिमितो मनोविकार उत्साहः। तत्प्रकृतिको वीररसः। ६. रौद्रशक्त्या जनितं चित्तवैक्लव्यदं भयम्। तत्प्रकृतिको भयानकरसः।

७. अहृद्यदर्शन-स्पर्शन-स्मरणजनितोऽपरिपूर्णो मनोविकारो जुगुप्सा। तत्प्रकृतिको बीभत्सरसः। ८. शृङ्गारादौ चमत्कारदर्शनजनितमनोविकृतेः यत्राङ्गतया भानं तत्र शृङ्गारादयः। यत्र प्राधान्येन भानं तत्र अद्भुतरस एव। ९. नवमस्तु शान्तो रसः। १०. दशमो भक्तिरसः। शान्तस्य निर्वेदः स्थायिभावः, भक्तिरसस्य तु स्नेहः।

यदुक्तम्—"भक्तिशृङ्गारयो रतेरेव स्थायिभावत्वम्" इति। तन्न; शृङ्गारे मनोऽनुकूले सुखसंवेदनरूपाया रतेस्तथात्वेन भक्तेश्च स्नेहरूपाया-स्तथात्वेन भेदात्। किञ्च—यूनोः परस्परं या रतिः, स शृङ्गारः। देव-गुरु-पित्रादिषु पुत्रादीनां या रतिः, सा भक्तिरिति च भेदात्। एवं स्फुट-चमत्कारि-वत्सलञ्च रसान्तरमाहुः।

यदुक्तम्—"रतिपदस्य स्नेहे रूढत्वात् कथं भगवदाकारतायां रतित्वम्" इति। तन्न; सात्त्विक-चित्तद्रवतायामेव रतिपदस्य रूढत्वेन तद्विशिष्टभग-वदाकारतायामपि तत्प्रयोगे बाधाभावात्।

मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां
वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः॥

अत्र भगवत्येव रौद्रा-ऽद्भुत-शृङ्गार-हास्य-वीर-करुण-भयानक-बीभत्स-शान्त-भक्तिरसाः व्यज्यन्ते। तदुक्तम्—

स्थायीभावोऽत्र सम्प्रोक्तः श्रीकृष्णविषया रतिः।
शुद्धसत्त्वविशेषात्मा रतिर्मुख्येति कीर्तिता॥
सम्भ्रमः प्रभुताज्ञानात् कम्पश्चेतसि सादरः।
अनेनैक्यं गता प्रीतिः सम्भ्रम-प्रीतिरुच्यते॥
ह्रासशङ्काच्युताबद्धमूला प्रेमेयमुच्यते।
सान्द्रश्चित्तद्रवं कुर्वन् प्रेमा स्नेह इतीर्यते॥
क्षणिकस्यापि नेह स्याद्विश्लेषस्य सहिष्णुता।
स्नेहः सरागो येन स्यात् सुखं दुःखमपि स्फुटम्।
तत्सम्बन्धलवेऽप्यत्र प्रीतिः प्राणव्ययैरपि॥

तदेकस्पृहत्वं रतेर्लक्षणम्। द्रावकः कामोऽप्यत्र न लौकिकः, किन्तु तत्स्वरूपात्मक एव। यदा ज्ञानिनं कामः कामक्रीडा च न स्पृशति, तदा कुतस्तत्स्पर्शः? भगवति तत्स्वरूप एव काम इत्युक्तमेव। तत्र कामानुरूपा क्रिया तु रसाविर्भूतिहेतुत्वेन नृत्यबन्धादिरूपा रसात्मिकैव। तदुक्तमाचार्यैः—

क्रिया सर्वाऽपि सैवात्र परं कामो न विद्यते ।
तासां कामस्य सम्पूर्तिर्निष्कामेनेति तास्तथा ॥ इति ।

अत एवोक्तम्—स तु स्त्रीभावत्वाद् गूढः । तदुद्बोधनार्थमेव नृत्य-बन्धादिकम् । तथा चोक्तम्—

रसात्मकस्तु यः कामः सोऽत्यन्तं गूढ एव हि ।
कामाख्यसुखमुत्कृष्टं भुङ्क्ते कृष्णो न चापरः ॥ इति ।

निखिलरसामृतसिन्धौ भगवति सर्वा अपि क्रियाः तत्तरङ्गस्थानीया रसरूपा एव, साक्षान्मन्मथमन्मथरूपत्वाद् भगवत एव रससारसर्वस्वरूप-त्वात् । पूर्णकामस्य आत्मारामस्यापि—

विकिरति मुहुः श्वासानाशाः पुरो मुहुरीक्षते
प्रविशति मुहुः कुञ्जं गुञ्जन् मुहुर्बहु ताम्यति ।
रचयति मुहुः शय्यां पर्याकुलं मुहुरीक्षते
मदनकदनक्लान्तः कान्ते प्रियस्तव वर्तते ॥

इति गीतगोविन्दोक्तदिशा यत् प्रियापराधीनत्वादिकं तत्तु अहं भक्तपराधीन इतिरीत्या भक्तिमाहात्म्य-प्रकटीकरणमेव । तासामपि पूर्वोक्तयुक्त्या पूर्णानु-राग-रससारसमुद्भूत-सरोजकिञ्जल्करूपत्वेन रसरूपतैव । भगवानिव ता अपि अप्राकृतविग्रहाः निष्कामाश्च ।

अत एव आत्मारामस्य तासु रमणमपि आत्मारामत्वमेव । रससारसर्वस्व-रूपस्य भगवतस्तन्माधुर्यसारसर्वस्वभूतायां मुख्यायां रासेश्वर्यां रमणमपि सुतराम् आत्मारामत्वम् । प्राकृतकामसम्बन्धे निष्कामत्वं न सम्भवत्येव । प्रकृते तु तासां निष्कामत्वं स्फुटम्,

संत्यज्य सर्वविषयांस्तव पादमूलं प्राप्ता भजस्व दुरवग्रह मा त्यजाऽस्मान् ।

इति वचनात् । तेन कामाभावेन साक्षान्मन्मथमन्मथेन रसात्मकेन भगवता पूरिते कामे तासां निष्कामतैव सम्पन्ना । तदप्युक्तम्—

कामेन पूरितः कामः संसारं जनयेत् स्फुटम् ।
कामाभावेन पूर्णस्तु निष्कामः स्यान्न संशयः ॥ इति ।

तेन भगवान् स्वस्वरूपमेव विग्रहरूपेण कामरूपेण चाविर्भाव्य भक्तेषु स्वस्वरूपं प्रतिष्ठाप्य रमते ।

भावस्वरूपो भगवान् । भावे च तासामेव स्वत्वम् । तेन तद्दत्त एव प्राप्यते । दानमपि न साक्षात्, किन्तु भावमाद्वारैव । तेन विधिवत् स्व-सर्वस्वत्यागपूर्वकविरहाग्नितप्ता वह्निरूपा मनसि समानीय ध्येयाः । तास्वपि यस्तापात्मको भावो भ्रमरगीताद्युक्तः, स सर्वनैरपेक्ष्येण हृदि निधाय

स्वास्थ्यहेतुनिखिलं प्रभुसम्बन्ध्यपि परित्यज्य केवलं भावमेव भावयेत्, न स्वरूपम्, न लीलाम्, न गुणान्वा। तदा तेनैव भावेन तापात्मकेन शोषणम्। ततो नवपल्लवता वसन्ते घर्मेणेव वृक्षाणाम्। ततो नवदेहे भावस्य स्थैर्यम्। ततस्तद्वैचित्र्यं विकलत्वमस्वास्थ्यञ्च। महासमुद्रनिमग्नस्येव भावरससिन्धु-निमग्नस्य विकलत्वास्वास्थ्ये। ततश्च अतिगाढभावे आनन्दमात्रकरपादादि-रूपे भावात्मकवह्नौ प्रवेशः। ततस्तद्रूपता। ततः कदाचिद्भक्तिदानार्थं तत्-प्राकट्यम्। भावेन हृदये सर्वत्र तस्यैव प्रवेशात्।

इयं भावना मुख्यफलप्राप्ति-साधनम्। विप्रलम्भात्म-तत्स्वरूपप्राप्तिः फलम्। स्वस्य तद्रूपता। तस्य च लीलाविशिष्टस्य स्वस्मिन् प्रवेशः। यथा वह्निः काष्ठे काष्ठं वा वह्नौ तथा भावरूपस्य भगवतस्तासु तासाञ्च भावात्मनि भगवति स्थितिः ओतप्रोतपटवत्। तापभावनस्य सर्वत्यागः साधनम्, तस्य च समर्पणम्।

'रसो वै सः', 'शृङ्गार एव सर्वे रसा' इति नाट्यसिद्धान्तः। तदुक्तम्—

> शृङ्गभावाङ्कुरो गूढ आरस्तु तद्गतो रसः।
> स्युः शृङ्गारसंवलिता रसा हास्यादयो यदा॥ इति।

सोऽपि तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः इति श्रुतिरीत्या साकारः आनन्दमात्र-कर-पाद-मुखोदरादिः आनन्दमयः। को ह्येवान्यात्...यदेष आकाश आनन्दो न स्यात् इत्यत्र आनन्दाऽऽनन्दमययोरैक्यम्। स्वरूपत ऐक्ये रस-पिण्डयोरिव भेदेनानुभवः। बहिःप्रकटरूपं रसधर्मसहितम् 'आनन्दमय'-शब्देन उच्यते। धर्मिमात्रं केवलं भावरूपम्, आनन्दशब्देनेति आनन्द एव सा प्रकटेति सुधाया भावात्मकभगवत्स्वरूपत्वात् आनन्दरूपतोक्ता—इति सुबोधिन्यादौ। उभयशब्दप्रतिपाद्यः पुरुषोत्तमः।

तस्य मूलभूतस्य प्राकट्ये अनुग्रहमूलभूता इच्छैव कारणम्। प्रपञ्चा-सक्तिरूप-पूर्वनिष्ठापरित्याजनपूर्वकमनुगृहीतेषु भक्तियोगविधानमेव तत्प्रयो-जनम्, तथा परमहंसानां मुनीनाममलात्मनाम् इति वचनात्। अन्येषां तदंश-कला-वेषादिरूपाणां तत्रैव सन्निवेशः। तेनैव कृष्णस्य पूर्णावतारत्वम्। धर्मरक्षार्थं व्यूहचतुष्टयविशिष्टस्य वैकुण्ठस्थ - पुरुषोत्तमस्य प्रादुर्भावः। भारहरणादिकं तु तत्तद्व्यूहद्वारा तत्कार्यमेव। अत एव तेषां निरोध-हेतुत्वम्, निरोधस्य मूलरूपलीलात्वेन तत्कार्यत्वात्। ब्रह्मादिप्रार्थनया तस्यैव वैकुण्ठगमनम्। पुरुषोत्तमस्तु वशे कुर्वन्ति मां भक्त्या इति भक्ति-मात्राधीनो लीलां कुर्वन् लीलास्थान एव विराजते। अन्यत्राप्युक्तम्—

